श्रीमदानंदतीर्थभगवत्पादाचार्य -विरचितं

# मायावादखंडनम्



संपादकीय : पं. रोट्ति वेंकटेश्

श्री समीर समय संजीविनी (रि) प्रतिष्ठान

नं.१६, अनन्त पद्मनाभ :, नि. १ अड्ड रस्ते,

मल्लेस्वर, बेङ्गलूरु-५६०००३, दूरवाणि : २३५६०४२७

श्रीमदानंदतीर्थ -भगवत्पादाचार्य -विरचितं

# मायावादखंडनम्

श्रीमद् जयतीर्थ विरचित टीका

श्री सत्यनाथ तीर्थ विरचित "परशु टिप्पणि"

श्री श्रीनिवासतीर्थ विरचित टिप्पणि-कन्नड अनुवाद सबंकृत)

संपादकीय : पं. रोट्टि वेंकटेश्





प्रकाशक :

**श्री समीर समय संजीविनी (रि) प्रतिष्ठान**

नं.१६, अनन्त पद्मनाभ :, नि. १ अड्ड रस्ते,

मल्लेस्वर, बेङ्गलूरु-५६०००३, दूरवाणि : २३५६०४२७

ಶ್ರೀಮದಾನಂದತೀರ್ಥ ಭಗವತ್ಪಾದಾಚಾರ್ಯ ವಿರಚಿತ 'ಮಾಯವಾದಖಂಡನ'
ಶ್ರೀಮತ್‌ಜಯತೀರ್ಥಚಾರ್ಯ ವಿರಚಿತ – ಟೀಕಾ
ಶ್ರೀ ಶ್ರೀನಿವಾಸತೀರ್ಥ ವಿರಚಿತ – ಟಿಪ್ಪಣಿ
ಶ್ರೀ ಸತ್ಯನಾಥತೀರ್ಥ ವಿರಚಿತ – ಪರಶು ಟಿಪ್ಪಣಿ
ಕರ್ನಾಟಕ ಭಾಷಾನುವಾದ ಸಮಲಂಕೃತ

ಮೊದಲ ಮುದ್ರಣ : 2011

ಪುಟಗಳು – 88

ಬೆಲೆ ರೂ. 60/–

ಮುಖಪುಟ ವಿನ್ಯಾಸ ಮತ್ತು
ಪುಟವಿನ್ಯಾಸ, ಸಹನಾ ಗ್ರಾಫಿಕ್ಸ್
ಅಕ್ಷರ ಜೋಡಣೆ : ಎನ್.ವಿ.ವಿ. ಗ್ರಾಫಿಕ್ಸ್

ಮುದ್ರಣ

**ಜಯಂತ್ ಪ್ರಿಂಟರ್ಸ್**
ಕಸ್ತೂರಬಾನಗರ, ಬೆಂಗಳೂರು–560026
ಮೊ : 95901 26777

॥ ಶ್ರೀ ವೈಕುಂಠ ಸೀತಾ ರಾಮೋ ವಿಜಯತೇ ॥

# ಶ್ರೀ ಕೂಡ್ಲಿ ಆರ್ಯ ಅಕ್ಷೋಭ್ಯತೀರ್ಥ ಮಹಾಸಂಸ್ಥಾನಂ

## ಆಶೀರ್ವಚನ



ವಾದಾದಯ ಪ್ರಕರಣ ಸ್ಫುಲಿಂಗಾಸ್ತನವೋ ಸಪ್ಸಲಂ ।
ವಿಪಕ್ಷ ಕಕ್ಷಂಕ್ಷಿಣ್ಯಂತಿ ಮಾರುತೇನತ್ವಯೇರಿತಾ: ॥

ಎಂಬ ಸುಮಧ್ವವಿಜಯದ ಉಕ್ತಿಯಂತೆ
ಶ್ರೀಮನ್‌ಮಧ್ವಾಚಾರ್ಯರ

ದಶಪ್ರಕರಣಗಳಲ್ಲಿ ಒಂದಾದ 'ಮಾಯವಾದ ಖಂಡನ' ಎಂಬ ಗ್ರಂಥವು ಒಂದೇ ವಾಕ್ಯದಿಂದಲೇನೇ ಮಾಯಾವಾದ ಮತದ ಒಂದೂಕಾಲ ಲಕ್ಷ ಗ್ರಂಥವನ್ನು ನಿರಾಕರಣ ಮಾಡುವ ಸಮಾರ್ಥ್ಯವುಳ್ಳದ್ದಾಗಿದೆ.

ಈ ಗ್ರಂಥಕ್ಕೆ ಶ್ರೀಮಜ್ಜಯತೀರ್ಥರು ಉತ್ಕೃಷ್ಟವಾದ ಟೀಕೆಯನ್ನು ಬರೆದಿದ್ದು, ತಪಸ್ವಿಗಳಾದ ಶ್ರೀವ್ಯಾಸರಾಜರು ಶ್ರೀ ಸತ್ಯನಾಥತೀರ್ಥರು, ಶ್ರೀಶ್ರೀನಿವಾಸತೀರ್ಥರೇ ಮೊದಲಾದವರು ಉದ್ಭೋಕವಾದ ಟಿಪ್ಪಣಿಗಳನ್ನು ಬರೆದು, ಮುಮುಕ್ಷುಗಳಿಗೆ ಮಹದುಪಕಾರವನ್ನು ಮಾಡಿದ್ದಾರೆ.

ಪ್ರಕೃತ ಶ್ರೀ ಸಮೀರ ಸಮಯ ಸಂಜೀವಿನಿ ಪ್ರತಿಷ್ಠಾನ ಬೆಂಗಳೂರು ಇವರು ಜಿಜ್ಞಾಸುಗಳ ಜ್ಞಾನ ಪಿಪಾಸೆಯನ್ನು ಹಿಂಗಿಸಲು ಮಾಯವಾದ ಖಂಡನದ ಟೀಕೆಯೊಂದಿಗೆ ಶ್ರೀ ಸತ್ಯನಾರ್ಥತೀರ್ಥರ 'ಪರಶು' ನಾಮಕ ಟಿಪ್ಪಣಿ ಮತ್ತು ಶ್ರೀ ಶ್ರೀನಿವಾಸ ತೀರ್ಥರ ಟಿಪ್ಪಣಿ ಇವೆರಡನ್ನೂ ಮುದ್ರಿಸುತ್ತಿದ್ದಾರೆ. ಜಿಜ್ಞಾಸುಗಳು ಈ ಗ್ರಂಥದ ಲಾಭವನ್ನು ಪಡೆಯಲಿ ಎಂದು ಹಾರೈಸುತ್ತಾ, ಈ ಸಂಸ್ಥೆಯಿಂದ ಉಪಯೋಗವಾಗುವ ಅನೇಕ ಗ್ರಂಥಗಳು ಮುದ್ರಿತವಾಗಲಿ ಎಂದು ಬಯಸುತ್ತೇವೆ.

ಮೊಕ್ಕಂ, ಬೆಂಗಳೂರು
26.3.2011

ಇಂತಿ ನಾರಾಯಣ ಸ್ಮರಣೆಗಳು

**श्री रघुविजयतीर्था:**

# ಪ್ರಕಾಶಕರ ನುಡಿ

ಶ್ರೀ ಸಮೀರ ಸಮಯ ಸಂಜೀವಿನೀ ಪ್ರತಿಷ್ಠಾನದ ಹರಿಗುರುಗಳ ಪ್ರೇರಣೆಯಿಂದ, ಈ ಹದಿನಾಲ್ಕನೆಯ ಗ್ರಂಥದ ಪುಷ್ಪವನ್ನು ಶ್ರೀಮದಾಚಾರ್ಯಕೃತ "ಮಾಯಾವಾದ ಖಂಡನ", ಟೀಕಾ ಶ್ರೀ ಸತ್ಯನಾಥ ತೀರ್ಥ ವಿರಚಿತ "ಪರಶು" ಟಿಪ್ಪಣಿ ಹಾಗೂ ಶ್ರೀಶ್ರೀನಿವಾಸತೀರ್ಥಿಯ ಟಿಪ್ಪಣಿ, ಪ್ರೋಫೆಸರ್ ಕೃಷ್ಣಸ್ವಾಮಿರಾಯಕೃತ ಕನ್ನಡದ ಅನುವಾದದೊಂದಿಗೆ ನಮ್ಮ ಭಗವದ್‌ಭಕ್ತರಿಗೆ ಸಂತೋಷದಿಂದ ಅರ್ಪಿಸುತ್ತೇವೆ.

ಈ ಗ್ರಂಥಕ್ಕೆ ಆಶೀರ್ವಚನವನ್ನು ಅನುಗ್ರಹಿಸಿದ ಕೂಡ್ಲಿ ಅಕ್ಷೋಭ್ಯ ತೀರ್ಥ ಮಹಾ ಸಂಸ್ಥಾನದ ಶ್ರೀಪಾದಂಗಳವರು 108 ರಘುವಿಜಯತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರು ದಯಪಾಲಿಸಿರುತ್ತಾರೆ. ಅವರಿಗೆ ಅನಂತಾನಂತ ಶಿರ ಸಾಷ್ಟಾಂಗ ನಮಸ್ಕಾರಗಳನ್ನು ಗೌರವಪೂರ್ವಕವಾಗಿ ಅರ್ಪಿಸುತ್ತೇವೆ.

ಪ್ರಕೃತ ಗ್ರಂಥಕ್ಕೆ ಆರ್ಥಿಕವಾಗಿ ಸಹಾಯ ನೀಡಿರುವ ಭದ್ರಾವತಿಯ ಶ್ರೀ ಕೆ.ಎಸ್. ವಾದಿರಾಜರವರಿಗೂ ಶ್ರೀ ಹರಿವಾಯುಗಳು ಅನುಗ್ರಹಿಸಲೆಂದು ಪ್ರಾರ್ಥನ.

ಈ ಗ್ರಂಥದ ಅಕ್ಷರ ಜೊಡಣೆಗೆ ಪಾತ್ರರಾದ ಸಹನಾ ಗ್ರಾಫಿಕ್ಸ್ ರವರಿಗೂ ಎನ್.ವಿ.ವಿ. ಗ್ರಾಫಿಕ್ಸ್ ರವರಿಗೂ ಹಾಗೂ ಮುದ್ರಣಕ್ಕೆ ಕಾರಣರಾದ ಪ್ರಹ್ಲಾದ್ ವಿಠಲ್‌ರವರಿಗೂ ನಮ್ಮ ಕೃತಜ್ಞೆಯನ್ನು ಅರ್ಪಿಸುತ್ತೇವೆ.

ಇತಿ

**ಚಿಟ್ಟಪಲ್ಲಿ ವೇದವ್ಯಾಸಚಾರ್ಯರು**

ಪ್ರಕಾಶಕರು



**ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀಸತ್ಯಾತ್ಮತೀರ್ಥಶ್ರೀಪಾದಂಗಳವರು**
**ಉತ್ತರಾದಿಮಠ**

ಶ್ರೀ ಸತ್ಯಪ್ರಮೋಧತೀರ್ಥರ ಕರಕಮಲಸಂಜಾತರಾದ,
ಮುಳಬಾಗಿಲು ಕ್ಷೇತ್ರದಲ್ಲಿ ವೃಂದಾವನಸ್ಥರಾದ
(ಶ್ರೀವೃಷನಾಮ ಸಂವತ್ಸರ, ಆಶ್ವೀಜ ಬಹುಳ ಸಪ್ತಮಿ)
(ಬೃಂದಾವನಸ್ತ)



**ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀಪ್ರಜ್ಞಾನನಿಧಿತೀರ್ಥರು**



ಪಂಡಿತ ಚಿಟ್ಲಪಲ್ಲಿ ಕೃಷ್ಣಾಚಾರ್ಯರು, ಕೋಲಾರ ಚಿನ್ನದ ಗಣಿ




ಶ್ರೀಮದ್ಅನಂತಪದ್ಮನಾಭ

# ಅರ್ಪಣೆ



ನಮ್ಮ ಪೂಜ್ಯ ಮಾತಾಪಿತೃಗಳಾದ

ಶ್ರೀ ಕೆ. ಶಾಮಾಚಾರ್ ಮತ್ತು ಶ್ರೀಮತಿ ಶಾಂತಾಬಾಯಿ

ಪುಣ್ಯಸ್ಮರಣೆಗಾಗಿ ಈ ತುಳಸೀದಳ ರೂಪವಾದ ಪ್ರಕಾಶನ

– ಕೆ.ಎಸ್. ವಾದಿರಾಜ್
ಮತ್ತು ಕುಟುಂಬದವರು

# मायावादखण्डनम्

नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ।
जसयत्यमितसज्ज्ञनसुखशक्तिपयोनिधिः ।।

विमतमनारम्भणीयम्, अन्यथाप्रतिपादकत्वात्, यदित्थं तत् तथा, यथा सम्प्रतिपन्नम् । न हि ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे । अद्वैतहानेः स्वरूपातिरेके । अनतिरेके स्वप्रकाशत्वादात्मनः सिद्धत्वात् स्वरूपस्य विशेषत्वाच्चात्मनो नानधिगतो विशेषः । सिद्धत्वात् स्वरूपस्य विशेषाभावाच्चा नाज्ञानं कस्यचिदावरकम् । अनधिगतार्थगन्तृ प्रमाणम् इति तन्मतम् ।

अज्ञनासम्भवादेव तन्मतमखिलमपाकृतम् । मिथ्यात्वे चैक्यस्यातत्त्वावेदकत्वमागमस्य स्यात् । सत्यता च भेदस्य । एवमेव प्रयोजनमपि निरस्तम् । स्वरूपत्वान्मोक्षस्य पूर्वमेव सिद्धत्वात् । अज्ञानासम्भवेन चतुर्थप्रकाराभावात् पञ्चमप्रकारताऽपि निरस्ता । विषयप्रयोजनाभावादेवाधिकारी च । तदभावादेव सम्बन्धोऽपि ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोक्षर उच्यते ।।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।।
यस्मात् क्षरमततोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ।।

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
पमसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ।।

महतः परमव्यक्तमव्यक्तापुरुषः परः ।
पुरुषान्न परं किंचित्सा कष्ठा सा परा गतिः ।।

भूम्नः क्रतुवज्ज्ययायस्त्वं तथा च दर्शयति इति विष्णोः सर्वोत्तमत्वमेव सर्वशास्त्रार्थत्वेन भगवता श्रुत्या चाभिहितम् ।।

इति सर्वज्ञामुनिना मायावादतमोऽखिलम् ।
निरस्तं तत्त्ववादेन सतां संशयनुत्तये ।।

नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थभगवत्पादाचार्यविरचितं मायावादखण्डनं सम्पूर्णम् ।।

## श्रीपद्मनाभतीर्थभट्टारकविरचिता
## मायावादखण्डनटीका

हरिः ॐ ।। अमितसज्ज्ञानसुखशक्तिपयोनिधित्वान्नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकर इत्युक्तम्। तत्र सज्ज्ञानसुखशक्तिपयोनिधित्वान्नरसिंहोऽखिला ज्ञानमतध्वान्तदिवाकरण इत्युक्तम्। तत्र सज्ज्ञानेनाज्ञानव्युदसनप्रकारमाह विमतमनारम्भणीयमि-त्यादिना। जैनादिमतवत्स्वमतस्यापि बाधितविषयत्वेनाङ्गकारान्मायावादिना जैनबौद्धादिग्रन्थवन्मयावादो नारम्भणीयो बाधितविषयत्वाविशेषदित्यर्थः।

मायावादस्य बाधितविषयत्वं प्रतिपादयति। न हीत्यादिना। ब्रह्मात्मैक्यं हि मायावादप्रतिपाद्यम्। न हि तन्निरूपयितुं शक्यते मायावादिना। तथा हि- यदेतद् ब्रह्मैक्यमात्मनस्तदेतदात्मव्यतिरिक्तमात्मस्वरूपं वा । आत्मातिरिक्तं सत्यं चेदद्वैत-हानिस्स्यात्। आत्मातिरेकेण वस्त्वन्तरानभ्युपगमात्। आत्मनोऽनतिरेके सिद्धसाध (नता) नापत्तिर्दोषस्स्यात्। स्वयंम्प्रकाशात्मस्वरूपप्रतिपादकस्यामानत्वं स्यात् । अज्ञातज्ञापकस्य मानत्वेनांऽङ्गकृतत्वात्। मेयत्वादेवात्मनो मिथ्यात्वं स्यात्। ज्ञेयस्य शुक्तिरजतवन्मिथ्यात्वाङ्गकारात्।

न च केनचिदाकारेण स्वयंम्प्रकाशमानोऽपि विशेषाकारेण माया वादप्रतिपाद्य इति वाच्यम्।

निर्विशेषत्वेनाङ्गीकृतत्वात्तस्य। आत्मन स्स्वयम्प्रकाशस्याज्ञानासम्भवान्नमनकल्पितो विशेषशस्त्रप्रतिपाद्य इति वक्तुं शक्यते । न तु कथमज्ञायमानसम्भवेनाज्ञानासम्भवान्नाज्ञाननिवृत्त्यर्थो मायावाद इति वक्तुं शक्यत्वादित्यर्थः। ब्रह्मैक्यमात्मातिरिक्तं सत्यं चेदद्वैतभङ्गस्स्यादित्युक्तम्। तन्न। ब्रह्मात्मैक्सस्य मिथ्याभूतत्वादित्याशङ्क्य परिहरति ।। मिथ्यात्वे चैक्यस्येति ।। ब्रह्मात्मैक्यं हि वेदान्तप्र-तिपाद्यमङ्गकृतं मायिना। तस्य मिथ्यात्वे वेदस्यातत्त्वाव-दकत्वेनाप्रमाणयं स्यातं । जीवब्रहणोरैक्यस्य मिथ्यात्वेन भेदस्य सत्यता । परस्परविरुद्धयोरेकत-रनिषेधस्यान्यतरविधि नियतत्वात्। अतो द्वासुप-र्णेत्यादिजवेशभेदवाक्यानुरोधेन तत्त्वमसीति-वाक्य-मग्रिर्माणवक इतिवद् गौणार्थमवगन्तव्यमित्यर्थः।

यथा जवब्रह्मौक्यलक्षणविषयकत्वमपि निरुपयितुमशक्यत्वेन बाधितं तथा प्रयोजनमपि निरूपयितुमशक्यत्वेन बधिकमित्याह एवमेव प्रयोजनमपि निरस्तमित्यादिना ।। यदेतत्साधनवैयर्थ्यात् न चात्मा ज्ञानासम्भवेन तन्निवृत्त्यसम्भवात् । न सन्नासन्नापि सदसन्न सदसद्विलक्षणः, किन्तु पञ्चमपकारोऽज्ञाननिवृत्तिरूपो मोक्ष इति यन्मायिनोक्तं तदप्यत एव निरस्तं भवति । सदसद्विलक्षणरूपचतुर्थप्रकाराज्ञानासम्भवेन पञ्चमप्रकारस्याज्ञानवि-वृत्तिरूपमोक्षस्य सुतरामसम्भवात्। अज्ञान विलक्षणयाऽऽत्माज्ञाननिवृत्या भाव्यम्। भावाभावयो-

र्भिन्नप्रकारत्वादिति सदसद्विलक्षणरूपा-ज्ञाननिवृत्त्या-ख्यमोक्षस्य पञ्चमप्रकारत्वं कल्पितं तदज्ञानासम्भवे न सम्भवतत्यर्थः । अत उक्तप्रकारेण मायावादे विषयप्रयोजनासम्भवादसम्भवावितं प्रयोजनमुद्दि-श्यासम्भवावितविषयप्रतिपत्त्यर्थं तद्बुद्धिमानधिकार न प्रवर्तत इत्यधिकार च निरस्तः । अधिकारिविषय-प्रयोजनानामसम्भवादेषां साध्यसाधनभावरूपस्स-म्बन्धोऽपि रिस्तः । तदाह ।। विषयप्रयोजनभावात् ।

बाधितत्वान्न ब्रह्मात्मैक्यं वेदप्रतिपद्यमित्युक्तम् । तर्हि किं वेदप्रतिपाद्यमित्यपेक्षितार्थं भगवद्वाक्येन साधयति ।। द्वाविमौपुरुषावित्यादिना ।। अस्यार्थो नारायणश्रुत्योच्यते ।

ब्रह्मरूद्रादयस्सर्वे शररक्षरणात्क्षराः ।
श्रीरक्षरात्मेत्युदिता नित्यचिद्देहका यतः ।
चेतनाचेतनस्यास्य राशेस्संशायकत्वतः ।
कूटस्थ आत्मा स ज्ञेयः परमात्मा हरिः स्वयम् ।
क्षराक्षरात्मयोर्यस्मादुत्तमस्स सदाऽनयोः ।
पुकक्षरुषोत्तमनामाऽतॉः प्रसिद्धो लोकवेदयो ।

इत्येतदर्थो विविच्य स्मृत्या समाख्यात इति योजनम् ।। इन्द्रियेभ्यः परा ह्यर्था इति ।।

एतत् श्रुत्यर्थः पुराणग्रन्थेनोच्यते- देवेभ्य इन्द्रिया-त्मभ्यो ज्यायां सोऽर्थाभिमानिनः ।

सोमवित्तपसूर्याप्या अश्व्यग्नीन्द्रेन्द्रसूनवः ।
यमो दक्षश्चेन्द्रियेशास्सुपर्णो वारुण तथा ।
उमेति चार्थमानिन्यस्तिस्रो द्विव्द्येकदेवताः ।
मनोभिमानिनो रुद्रवन्द्रशेषास्त्रयोऽपि तु ।
ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिस्सरस्वती ।
तस्य ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
तस्यास्तु पुरुषो विष्णुः

पूर्णत्वान्नैव तत्समः । कश्चित्कुतश्चिच्छेष्ठस्तु नास्तति किमु सा कथा । इति । द्विव्द्येकदेवता इत्यनेन द्वयोश्शब्दस्पर्शयोस्सुपर्णी देवता, रूपरसयोर्द्वयारूणी देवता, गन्धस्योमा देवतेत्युक्तं भवति ।

सर्वशास्त्रार्थत्वेन यद्विष्णोस्सर्वोत्तमत्वं तद्भगवत्तवाध्युक्तं तद्भगवत्कृतब्रह्मसूत्रेण द्रढयति- भूम्रः क्रतुवज्ज्ययस्त्वं तथा च दर्शयतीति । वेदिकत्वेन मायावादस्य प्रकृतत्वेन सज्ञनानां विष्णोस्सर्वोत्तमत्वं वर्णितं न वेति संशयसस्सयात् । चतन्निवृत्त्यर्थं मायावादं निराकृत्य तत्त्ववादेन ब्रह्मोशानादिजगदुत्तमत्वं विष्णोस्स्थापितं श्रीमदान्दतर्थमुनिनेत्याह इति सर्वज्ञमुनिनेति । उक्तार्ये दृढविश्वासार्थं भगवद्वेदव्यासवचनं महभारता-द्युक्तमुदाहरति । नास्ति नारायणसमिति ।। नास्ति नारायणसमं न भूतं न भविष्यतत्यस्य वाक्यस्य सत्यत्लवज्ञकङ्थनेन रूद्रादेर्जगदुत्तमत्ववचनं पुराणादि-गतमन्यथार्थमिति सचितम् ।

।। इति श्रमदान्दतर्थभगवत्पादविरचितमायावादखण्डटका श्रीमद्मनाभतर्थभट्टारकविरचिता समाप्ता ।।

श्रीवेणुपल्ली श्रीनिवासतीर्थविरचित मायावाखण्डनटीकायाः ।

## टिप्पणी

**श्रीरामं हनुमेत्सेन्यं श्रीकृष्णं भीमसेवितम् ।**
**श्रीव्यासं श्रीमदान्दतीर्थसंसेवितं भजे ।।१ ।।**
**प्रणम्य यादवाचार्यगुरूणां पादपङ्कजे ।**
**व्याख्यास्ये दुर्गमां मायावादखण्डनपञ्चिकाम् ।।२ ।।**

सर्वज्ञकल्पाः टीकाकाराः श्रीमज्जयतीर्थश्रीचरणाः श्रीमदान्दतीर्थाचार्यकृतस्य मायावादखण्डनाख्यप्रकरणस्य-नाख्यप्रकरणस्य टीकां कर्तुकामाः स्वचिकीर्षितग्रन्थस्य निर्विन्घपरिसमाप्त्यर्थं श्रीमन्नृसिंहस्तवनरूपं मङ्गल कृत्वा शिष्यशिक्षायै ग्रन्थादावुपनिबन्घन्तः स्वचिकीर्षितं प्रतिजानते ।। नरसिंहमित ।। असह्याः प्रारिप्सितप-रिसमाप्तिरूपेष्टविरोधित्वेन सोढुमशक्याः उरवः अल्पमङ्गलानिवर्त्याः बहुसंख्याका वा ये प्रत्यूहाः बिन्घाः, विन्घोऽन्तरायः प्रत्यूह इत्यमरः, ते सम्यग्ज्ञानविरोधि-त्वादिना तिमिराणीव । तान्यपहन्तीति प्रत्युहतिमिरापहः, तम् । एताद्दशाप्रत्यूहनिरसने नरसिंह एव समर्थः । नृसिंहादिकमन्यच्च दुरितादिनिवृत्तय इति वचनात् । अतः स एव प्रणम्य इत्याशयः । मयावादेति परकीयप्रकरणं तस्य

खण्डनं तन्नामकं भगवत्पादकृतं प्रकरणं व्याकरिष्ये व्याख्यानां करिष्ये ।

नन्विदं प्रकरणं न व्याकर्तव्यं विषयप्रयो-जनाधिकारिसम्बन्धलक्षणानु बन्धचतुष्टयविधुरत्वा-दित्याशङ्क्य अस्य प्रकरणत्वात् प्रकरणस्य शास्त्रैकदेश सम्बन्धित्वाच्छास्त्रे यद्विषयादिकं तेनैवास्य विषयादिमत्त्वम् । अतो युक्तं व्याकर्तव्यत्वमित्यभिप्रेत्य श्रुतितन्मीमांसयोः पराभिप्रेतविषयादिनिराकरणपूर्वकं स्वाभिप्रेतं विषयादिकं समर्थयितुम् इदम् प्रकरणं प्रवृत्तमित्यभिप्रेत्य श्रुतितन्मीमांसाशास्त्रयोः स्वाभिप्रेतं विषयादिकं तावदादौ दर्शयति ।। **इह हीत्यादिना** ।। इह अधिकार्यनधिकारिवर्गे अधिकारिण इत्यन्वयः । नन्वधिकारी कीदृश इत्याशङ्क्य नित्यानित्यवस्तुविवेको वैराग्यं शमदमादिसम्पत्तिर्मुमुक्षेति साधनचतुष्टयसम्पन्न एवेत्याशयेनोक्तम् ।। विविधेत्यादि ।। विविधसांसारिकदुःखदर्शनेनेत्यनेन नित्यानित्यवस्तु विवेकोऽभिप्रेयते । दुःखदर्शनेन विरक्तस्येत्युक्तव नित्यानित्यवस्तुविवेकस्य वैराग्यसाधनत्वं सूचितमिति ज्ञातव्यम् । शमो भगवन्निष्ठबुद्धिमत्त्वं दम इन्द्रियनिग्रहः । शमो मन्निष्ठता बुद्धिर्दम इन्द्रियनिग्रहः इति भगवद्वचनात् । आदिपदेन शान्तो दान्त उपरतस्तितिक्षुः इत्यादिश्रुत्युक्तविषयालम्बबुद्धिमत्त्वादिरूपो परत वादिसङ्ग्रहः । अनेन साधनाध्यायार्थोऽभिप्रेत इति

द्रष्टव्यम्। मोक्षस्वरूपे वादिनां विप्रतिपत्तेः स्वमते तन्निरुपणायोक्तं तन्निवृत्त्यै परमानन्दावाप्तये चेति। आनन्दस्य परमत्वं नाम दुःखासम्भिन्नत्वं नित्यत्वं (चेति) वेति द्रष्टव्यम्। तथा च आत्यन्तिकदुःखनिवृत्ति विशिष्टपरमानन्दाविर्भाव एव मोक्ष इत्युक्तं भवति। अनेन फलाध्यायार्थोऽभिप्रेत इति ज्ञातव्यम्। निखिलगुणोदा-रत्वोपपादनाय सकलेत्यादि विशेषणम्। प्रपञ्चाभेदे तदनुपपत्तिरिति भावः। अनेन समन्वयाध्यायार्थो वर्णितः। तत्र ह्यपर्यायानन्तशब्दानां महायोगवृत्त्या परब्रह्मणि समन्वय निरूपणेन निखिलगुणोदारत्वस्य वर्णितत्वादित्यवगन्तव्यम्। अत्र प्रपञ्चाद्भिन्नमित्येवोक्तौ मायावादिनापि प्रपञ्चाद् ब्राह्मणे व्यावहारिक भेदाङ्गीकारात् तादृशस्य भेदवतो ब्रह्मणः अस्मन्मते विषयत्वापत्त्या तत्परिहाराय परमार्थतो भिन्नमित्युक्तम्। भेदाभेदवादिनस्त्रिविधाः। जीवब्रह्मणोः संसारे केवलं भेदः मुक्तौ त्वभेद इति केचित्। अन्ये तु संसारे भेदाभेदौ, मुक्तौ त्वभेद एवेति। अपरे तु संसारे मुक्तौ च भेदाभेदावेवेति। मतत्रयेऽपि भेदः सत्योपाधिकृतः पारमार्थिक एवेति। तत्र संसारे परमार्थतोऽत्यान्तभेदस्यापि कैश्चिद्भेदाभेद-वादिभिः अङ्गीकारात्तद्व्यावर्तनाय एवेत्युक्तम्। तदर्थस्तु सर्वदेति। संसारे मुक्तौ चेत्यर्थः। संसारे मुक्तौ च भेदाभेद एवेति भास्करैकदेशिमतव्यावृत्त्यर्थम् अत्यन्तेत्युक्तमिति द्रष्टव्यम्। ननु युक्तिसमयादिभिः उक्तसमन्वये निरोधिते ब्रह्म

दोषवदपि स्यादित्याशङ्कां परिहरतोऽविरो-धाध्ययस्यार्थो वर्णितो निरस्तसमस्तदोषमिति । तत्र युक्त्यादीनामभासत्ववर्णनेन परब्रह्मणो निर्दोषत्वस्यैव वर्णितत्वादिति भावः ।। तदुपकरणेति ।। श्रुत्यर्थनिर्णाय-कन्यायग्रनन्थनात्मिकाया इत्यर्थः । धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यभागं मीमांमा पूरयिष्यतीति वचनादिति द्रष्टव्यम् । अनेन श्रुतितन्मीमांसाशास्त्रयोः उक्तविशेषणविशिष्टं परब्रह्म विषयः । निरुक्तो मोक्ष प्रयोजनम् । साधनचतुष्टसम्पन्नोऽधिकारी । यथायोग्यं सम्बन्ध इत्युक्तं भवति । तत्त्वमिति सैद्धान्तिकं रहस्यं प्रमेयमित्यर्थः ।

एवं श्रुतितन्मीमांसाशास्त्रयोः स्वाभिप्रेतविषयादिकं निरूप्य पराभिप्रेतविषयादिमाह ।। **अपरेत्यादिना** ।। अज्ञाननिमित्तं एवयाज्ञाननिमित्ताम् । निबर्हणीयं विनाश्यम् ।। अनर्थहेतोः ।। दुःखाद्यनर्थहेतोः । अस्याज्ञानस्य प्रहाणाय विनाशायेत्यर्थः ।। **आत्मैकत्वेति** ।। आत्मनः जीवस्य यद् ब्रह्मणाएकत्वम् ऐक्यं तस्य या विद्या यज्ज्ञानं तस्य प्रतिपत्तये प्राप्तय इत्यर्थः ।। **सर्वशास्त्रेति** ।। श्रुतितन्मीमांसाशास्त्रेत्यर्थः । तथाच जीवब्रह्मैक्यं विषयः । अज्ञाननिवृत्तिः प्रयोजनम् तत्कामोऽधिकारी । यथायोग्यं सम्बन्ध इत्युक्तं भवति ।

परममङ्गलं परममङ्गलरूपम् । अखिलस्याप्य-ज्ञानकल्पितत्वोक्तौ चैतन्यस्याज्ञानकल्पितत्वं प्रसज्येत ।

अतो व्याचष्टे । चैतन्यमात्रेति । मात्रशब्दः केवलार्थः ।। अज्ञानकल्पितमिति यन्मतमिति ।। अत्र मध्यमपदलोपीसमासः । अज्ञानेत्यन्तरं परिकल्पितशब्दस्य लोपाङ्गीकारात् । अज्ञानेन परिकल्पितम् अज्ञानपरिकल्पितं, तच्च तत् अखिलं च अज्ञानाखिलमिति भाव्ये विशेष्यभूताखिलपदस्य पूर्वनिपातमङ्गीकृत्य विशेषणं विशेष्येण बहुलमित्यत्र बहुलग्रहणाद्विशेष्यस्यापि विशेषणेन समासाङ्गीकरात् अखिलाज्ञानमिति मतम् अखिलाज्ञानमतं, तदेव ध्वान्तमिवाखिलज्ञानमतध्वान्तं, तस्य दिवाकर इव । नन्वभिभवार्थस्य जयिधातोः सकर्मकत्वस्य देवदत्तः शत्रून् जयतीत्यादौ दर्शनेनात्र कर्मानुक्तेर्न्यूनतेत्यतो नात्र जयिधातुरभिभवर्थः, किन्तु उत्कृष्ठत्वेन सत्तार्थकःतस्मिन्नर्थे स धातुरकर्मक एव । अतो न तदनुक्तिदोष इत्याशयेनाह ।। **जयतीति** ।। अत्र नियामकमाह ।। **तथाचोक्तमिति** ।। जि जय इति धातोः जयाभिभवयोर्वृत्तिरस्तत्यर्थः । अभिभवः तिरस्कारः ।। कोऽसावाद्योऽत्यर्थ इत्यत आह ।। **उत्कर्षप्राप्तिरिति** ।। विशेषणमिति ।। ज्ञानं च सुखं च शक्तिश्च ज्ञानसुखशक्तयः ।। **इत्यत इति** ।। तद्वदसापि परिमितत्व शङ्कापरिहारायेत्यर्थः ।। **विशिनष्टीति** ।। अमितत्वं नृसिंहस्य विशेषणं दत्तमित्यर्थः । ततश्च अमितश्चासौ सज्ज्ञानसुखशक्तिपयोनिधिश्चेति विग्रहो द्रष्टव्यः । ननु विशेषणान्तरं विहाय एताभ्यामेव विशेषणाभ्यां स्तवने किं

प्रयोजनमित्यत आह ।। द्विविध इति ।। खल्विति वाक्यालङ्कारे ।। प्रसञ्जितेति ।। प्रसक्तेत्यर्थः ।। **इष्टसम्पादनेति** ।। तं यथा यथोपासते तदेव भवतीति श्रुतेरिति भावः ।।

।। **तन्मीमांसाभिरिति** ।। तदर्थनिश्चायकन्याय-ग्रथनात्मिकाभिरित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ।। **न चैतदित्यादि** । अज्ञानपरिकल्पितत्वरूपमिथ्यात्वाभावे चेश्वरनिष्ठसार्वज्ञादेः जीवनिष्ठदुःखादेश्च सत्यत्वापत्त्या विरुद्धधर्माधिकरणत्वेन जलानलवत् जीवेश्वरयोः भेद एव स्यादिति भावः ।। **कथमेवमुच्यत इति** ।। अखिलाज्ञानमतं ध्वान्तसममिति कथमुच्यत इत्यर्थः ।। न चैतदिति ।। ऐक्यप्रतिपादकत्वमेव नास्ति । तथा अप्रतिभासादिति भावः । **कथमेवमुच्यत इति** ।। अखिलाज्ञानमतं ध्वान्तसममिति कथमुच्यत इत्यर्थः ।। न चैतदिति ।। ऐक्यप्रतिपादकत्वमेव नास्ति । तथा अप्रतिभासादिति भावः । ननु कथमप्रतिभासेः? ऐक्यपरतया श्रुतितन्मीमांसाशस्त्रं व्याख्यास्यामीति चेत्तत्राह ।। **तत्परतयेति** ।। **विषयीभूतमिति** ।। धर्मिभूतमित्यर्थः । **निराश्रयत्वादिदोषेति** ।। आश्रयासिध्द्यादिदोषेत्यर्थः । आदिपदेन सिद्धसाधनत्वा प्रसिद्धविशेषणत्वयोः ग्रहणम् । **सूचितत्वादिति** ।। यदि वेदादिकमेव न स्यात्तर्हि आरम्भणीयत्वानारम्भणीयत्वाभ्यां विमतिः किमाश्रया

स्यात्, किं धर्मिणी स्यात्, कुत्र स्यादिति यावत् । यदि वाऽनारम्भणीयत्वं सिद्धमप्रसिद्धं वा स्यात्तर्हि आरम्भणीयत्वानारम्भणीयत्वाभ्यां कथं विमतिः स्यात् । एकस्याः कोटेः सिद्धत्वादप्रसिद्धत्वाच्चेत्यर्थः । अस्ति चेयम् । तस्मान्ननिराश्रयत्वादीति विमवग्रहणेन सूचितमित्यर्थः ।। **आपाद्यवैकल्यादीति** ।। आदिपदेनाश्रयहीनत्वग्रहणम् । **दोषेति** ।। दृष्टान्तदोषेत्यर्थः । **सूचनायेति** । वक्ष्यमाणरीत्या आपाद्यमनारम्भणीयत्वं बौद्धशास्त्रे न स्यात्, तदा केन धर्मेण सम्प्रतिपत्तिः स्यात् । यदि बौद्धशस्त्रमेव न स्यात्, तर्हि आवयोरना रम्भणीयत्वेन सम्प्रतिपत्तिः कुत्र स्यात् । अस्ति चेयं तस्मान्नापाद्यवैकल्पादीति सम्प्रतिपन्नग्रहणेन सूचितमित्यर्थः ।

**अश्रोतव्यत्वादिकमिति** ।। अत्रादिपदेन अनुपादेयत्वग्रहणम् ।। **अप्रणेतव्यत्वादिति** ।। अपौरुषेयत्वादिति भावः । **दर्शनादिति** ।। तथा च आपाद्यवैकल्यमिति भावः । उपादेयत्वस्यापि दर्शनादित्यपि द्रष्टव्यम् । ननु विमतनमनारम्भणीयमिति वेदान्तमीमांसाशास्त्रस्यानारम्भणीयत्वसाधने भवतामपसिद्धान्तप्रमाणबाधौ स्यातामिति चेत्तत्राऽह ।। **स्यादितीति** ।। तथा च दूषणानुमानत्वान्न तत्रापसिद्धा-न्तादिकं दोष इत्याशयः । यथोक्तम् अतो न दूषणेऽपसि-द्धान्तादीति । नन्वेवमैक्यप्रतिपादकत्वरूपापादकस्य

बहिरेवोक्तौ अन्यथा-प्रतिपादकत्वादिति हेतुवाक्यस्य वैयर्ध्यरूपदोषः स्यादिति चेत्तत्राऽऽह ।। **आपादकमेवेति** ।। जीवब्रह्मैक्यप्रतिपादकत्व रूपापादकमेवेत्यर्थः । कथं विव्रियत इति चेत्तत्राऽऽह । **तच्चेति** ।। विवरणमित्यर्थः । विवरणप्रकारमिति यावत् । उत्तरत्रेति ।। ननु यद्यद्वैतपरमित्यादिना ग्रन्थेनेत्यर्थः ।

एवं दूषणानुमानत्वमभिप्रेत्य व्याख्याय इदानीं साधनानुमानत्वमभि प्रेत्यापि व्याख्याति ।। **अथवेत्यादिना** ।। नन्वैक्यपरश्रुतितन्मीमांसाशास्त्रानारम्भणीयत्वसाधनस्यैव सङ्गतत्वेन मायावादिशास्त्रानारम्भणीय त्वसाधनं कर्णे स्पृष्टे कटिं चालयतीति न्यायमनुसरतीत्याशङ्कापरि हारायोक्तम् वेदादेः तत्परत्वनिरासायेति । अत एवोक्तमैक्यपरतया व्याकुर्वदिति । तथा च तस्यानाम्भणीयत्वसाधने वेदादेर्जीवब्रह्मभेदपरत्वमेव सिध्यति । ऐक्यपरत्वोपपदाकोपायाभावादिति भावः ।। कथमिति ।। तथा च स्वरूपासिद्धिरिति भावः ।

शास्त्रविषयतया शास्त्रप्रतिपाद्यतया यदुक्तं तच्चोत्तरत्र प्रदर्शयिष्याम इति तत् प्रदर्शयितुं शङ्कते ।। **नन्विति** ।। आपादकस्य अद्वैतपरत्वरूपस्य ।। एतदेवेति ।। अन्यथाप्रतिपादकत्वादित्येतदेवेत्यर्थः ।। **दृष्टान्तानुपपत्तिरिति** ।। बौद्धशास्त्रे ब्रह्मैक्यप्रतिपादकत्वरूपोपपादकाभावात् साधनवैकल्यमित्यर्थः ।।

**उपपादनानुपयोग इति** ।। कथं ब्रह्मात्मैक्यप्रतिपादकत्वं विमतस्य शास्त्रस्येति शङ्कायां न हि ब्रह्मात्मैक्यस्य याथार्थ्यमित्युपपादनानुपयोग रूपासङ्गतिरित्यर्थः । दृष्टान्तानुपपत्तिसमुच्चयार्थश्चशब्द इत्यवगन्तव्यम्। यद्वा, ननु कथमैक्यप्रतिपादकत्वं विमतस्य शास्त्रस्येत्येवं शङ्कायां न हि ब्रह्मेति वाक्यं चेत्तत्राऽऽह।। **असङ्गतत्वं चेति** ।। **निमित्तनैमित्तिकभावस्येति** ।। प्रयोज्यप्रयोजकभावस्येत्यर्थः । अद्वैतस्य शास्त्रार्थत्वं निमित्तं प्रयोजकम्, अनारम्भणीयत्वं नैमित्तिकं प्रयोज्यम्। तद्भावस्यास्फुटत्वादित्यर्थः। तथा चाप्रयोजकत्वमित्याशयः।। **कथमिति** ।। आपादनं कथमित्यर्थः।। ततश्चेति ।। आन्यथाप्रतिपादकत्वेननारम्भणीयत्वरूपो द्वितीयतर्के सम्प्रतिपन्नमित्युक्तं बौद्धशास्त्रमत्र दृष्टान्त इत्यवगन्तव्यम्।

**तेनैवेति** ।। ब्रह्मस्वरूपातिरिक्तेन परमार्थसता एक्येनैवेत्यर्थः।। द्वैतापत्तेरिति ।। द्वितीयसत्यवस्तुसद्भावापत्तेरित्यर्थः । अद्वैतपरं सत्यभूत द्वितीयवस्त्वभावपरम् । स्वोक्तर्थे खण्डनकारसम्मतिमाह ।। **यथाऽऽहेति** ।। तच्चद्वैतं ब्रह्मैव स्यादित्यन्वयथः। कुतः। यतोऽस्मादुक्तं प्रमेयं ब्रह्मैवेदं सर्वमिति श्रुत्यर्थेन सहैक्यमापन्नं प्राप्तम्। अस्माभिरैक्यस्य ब्रह्मात्मकत्व मुच्यते। श्रुत्या च सर्वस्य ब्रह्मात्मकत्वमभिधीयते। सर्वमध्ये चैक्यं पतितमिति तस्यापि ब्रह्मात्मकत्वं प्राप्तम्। तथा चास्मदुक्तं प्रमेयं श्रुत्युक्तं च प्रमेयमेकमेव

जातमित्यर्थः । तथा चास्मदुक्तप्रमेये श्रुत्यानुकूल्य-मप्यस्तीति भावः ।। **बोध्यस्येति** ।। श्रुतिबोध्यस्य जीवस्येत्यर्थः । नित्यसिद्धत्वदिति ।। मामहं जानामीति साक्षिप्रत्यक्षेणेत्यर्थः । तदेवोपपादंयति ।। **स्वविषयप्र-काशत्वमिति** ।। परेण च नैतादृशं स्वप्रकाशत्वमङ्गीकर्तुं शक्यं, विशेषानङ्गीकारेण कर्तृकर्मत्वविरोधादिति भावः ।।

**अद्वैतादिविशेषाकारेणेति**। अद्वैतरूपः कश्च विशेषाकारः तेन रूपेणेत्यर्थः । सिद्धसाधनत्वादि-कमित्यत्राऽदिपदेनाप्रतिपादकत्वादि ग्रहणम् । भवतां मते । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमुपपदायति ।। **स्यादेवमिति** ।। **तद्विशेषतयेति** ।। तद्धर्मतयेत्यर्थः ।। तन्मात्रमिति ।। घटेनात्यान्ताभिन्नमित्यर्थः । खण्डितत्वेन भेदाभेदसद्भावा-दिति भावः । तद्विशेषस्तद्धर्मः । यद्वा, गुणगुणिनोरिति यावद्द्रव्यभाविगुणगुणिनोरित्यर्थः । अयावद्द्रव्यभाविना-र्गुणगुणिनोः सिद्धान्ते अत्यन्ताभेदाभावेन दृष्टान्ती करणानुपपत्तेः । **तद्विशेषतयाऽङ्गीक्रियत इति** ।। भेदप्रतिनिधिरूप विशेषाश्रयनिष्ठतद्धर्मतयेत्यर्थः ।। **न चैक्यमपीति** ।। आत्माभिन्नं विशेषाश्रयनिष्ठधर्मरूपं नेत्यर्थः । येन तद्विशेषत्वाङ्गीकारेण अनधिगतः ऐक्यरूपो विशेषः ।। **निर्विशेषत्वेति** ।। निर्धर्मकत्वेत्यर्थः ।

इति च तन्मतमित्यत्र चशब्दसूचितदोषमाह । **परार्थत्वादिति** । परप्रवृत्तिनिवृत्त्युपयोग्यर्थप्रतिपा-

दकत्वादित्यर्थः । एको दोषः । ननु गन्तृशब्दस्य कर्त्र्यर्थकतृच्प्रत्ययान्तत्वेन अवगतिकर्तृवाचकतया करणे इन्द्रियादावसम्भव इत्यत आह ।। **गन्तृशब्देनेति ।** **अवगतिसाधनमिति** ।। अवगतिकरणमित्यर्थः । अर्थशब्देन तथाभूतार्थ उच्यते । तथा चानधिगततथाभूतार्थावगतिकरणं प्रमाणमिति लक्षणमभिप्रेत्य क्रमेण पदानां कृत्यं दर्शयति ।। **अनधिगतेतीत्यादिना ।** **स्मृत्यादीति** ।। स्मृतेरादिः कारणं स्मृत्यादिः संस्कार इत्यर्थः । तथा च स्मृतेरपि तथाभूतार्थविषयकावगतित्वेन तत्कारणे संस्कारेऽतिव्याप्तिनिरासायानधिगतेति पदम् । स्मृतेस्तु पूर्वानुभूतार्थावगतिहेतुत्वेनानधिगतार्थावगतित्वाभावान्न तत्कारणे संस्कारेऽतिव्याप्तिरिति भावः । तथाभूतार्थपदकृत्यमाह ।। **शुक्तिरजतादिज्ञानेति** ।। शुक्तिरजतादिः ज्ञायते अनेनेति व्युत्पत्त्या शुक्तिरजतादिज्ञानशब्देन दुष्टेन्द्रियं ग्राह्यम् ।। **गन्तृपदमिति** ।। गन्तृशब्दस्यावगतिकारणार्थत्वादित्यर्थः । तथा चानधिगततथाभूतार्थेत्युक्ते अर्थ एवातिव्याप्तिः स्यात् तदर्थमवगतिपदम् । तावत्युक्ते फलभूतायामवगतावेव अतिव्याप्तिः स्यात तदर्थं कारणपदम् । तता च गन्तृपदेन तदुभयनिवृत्तिरिति भावः । एवं चेत्कर्तरि प्रमेये चातिव्याप्तिरित्यत आह । **तस्य चेति** ।। गन्तृशब्दार्थान्तर्गतस्य कारणपदस्येत्यर्थः **न कर्तरीति** ।। इदमुपलक्षणम् । प्रमेयस्यापि विषयत्वेनावगति-

कारणत्वात्तत्राप्यतिव्यापित्परिहारोऽनेन जायत इति । सत्यपि प्रमातरि प्रमेये च प्रमानुत्पत्तेः। तयोरविलम्बेन प्रमोत्पादकत्वरूपसाधनत्वाभावादिति भावः । नन्वेतद्भाट्टानां लक्षणम् । अतः तन्मतमिति कथनुक्तमित्यत आह ।। **एतदिति** ।। नन्वेतावता प्रकृते किमायातमित्यतो मूलाभिप्रेतमापादनं दर्शयति ।। यदीत्यादिना ।।

पूर्वमिति ।। अनतिरेक इति मूल इत्यर्थः ।। तद्विपर्ययेणेति ।। अतिरेकपक्षप्रतिषेधेनानतिरेकपक्षमङ्गीकार्येत्यर्थः ।

।। **आत्मैवाज्ञानहानिरिति** ।। अधिकरणातिरिक्ताभावाभावात् । व्यवहारे भट्टनय इत्यङ्गीकृतत्वादिति भावः । पूर्वमेवेत्यत्र शास्त्रप्रवृत्तेरिति शेषमभिप्रेत्याऽऽह ।। **प्रागेवेत्यादि** ।।

टीका

ज्ञात आत्मैवाज्ञानहानिरिति पक्षनिरासः ।

ज्ञात आत्मैवाज्ञानहानिर्नात्ममात्रम् इति कश्चित् । तदसत् । आत्मनोज्ञानकर्मतानङ्गीकारात् । वृत्तिविषयताऽस्तीति चेत् । तथापि वृत्तिविशिष्ट आत्मा मोक्ष इत्युक्तं स्यात् तथा च वृत्तेर्निवृत्तौ मोक्षनिवृत्तिप्रसङ्गः । वृत्त्युपलक्षित आत्मा मोक्ष इति चेत्, तथापि जीवन्मुक्तौ प्रसङ्ग इत्येषा दिक् ।

।। **ज्ञात आत्मैवेति** । तथा चाऽत्मनो ज्ञा(तत्वार्थं) नार्थं शास्त्रप्रवृत्तिरिति भावः ।। **ज्ञानकर्मतेति** ।। चैतन्यविषयत्वेत्यर्थः । वृत्तिप्रतिबिम्बतचैतन्याभिव्यक्ता-धिष्ठानचैतन्यरूपज्ञानविषयत्वस्य कर्तृ कर्मविरोधेना-ऽत्मनोऽनङ्गीकारादिति भावः । **वृत्तिविषयतेति** ।। वेदान्तजन्य वृत्तरूपज्ञानविषयतेत्यर्थः । **प्रसङ्ग इति** ।। विशेषणनिवृत्तौ विशिष्टनिवृत्तिनिय-मादिति भावः ।। **वृत्त्युपलक्षित इति** ।। न चोपलक्ष-णनिवृत्तौ उपलक्षितनिवृत्तिरिति नियमोऽस्ति । काकनिवृत्तावपि गृहाविृत्तिदर्शनादिति भावः ।। **जीवन्मुक्तविति** ।। तत्त्वविषयकापरोक्षवृत्त्युपलक्षितस्याऽत्मनो जीवन्मुक्त्यवस्थायामपि सत्वेन तदानीयम-प्यज्ञाननिवृत्तिप्रसङ्गः । न चेष्टापत्तिः । भिक्षाटनादौ प्रवृत्त्यभावप्रसङ्गात् । न चाविद्यालेशात् प्रवृत्तिः । तस्या निरंशत्वात् । सांशत्वेऽपि वा सोंऽज्ञानकार्यं न वा ? न चेत् सत्यत्वापत्त्या मिथ्यात्वासिद्धिः । आद्ये अज्ञाननिवृत्तौ तस्यावस्थानानुपपत्तिः । उपादाननिवृत्तौ उपादेशस्यावस्थानादर्शनात् । न चाविद्यासंस्कारात् प्रवृत्तिरिति वाच्यम् । तस्याप्युक्तरीत्याऽयोगादित्यादिकं दिक्शब्दार्थः ।

एवमिष्टसिद्धिकारमतानुसारित्त्वप्रदीपिकाकारादिमतं दूषयित्वा आनन्दबोधादिमतदूषणपरत्वेनोत्तरमूलं

व्याख्यातुमाशङ्कते ।। **अपर आहेति** ।। **अन्यमेवेति** ।। आत्मस्वरूपाद्भिन्नमेवेत्यर्थः । तस्य अविद्यास्तमय-लक्षणमोक्षस्य ।। **असत्त्व इति** ।। अज्ञाननिवृत्तिरू-पमोक्षस्य शशश्रृङ्गवदत्यन्तासत्त्वे मोक्षस्य स्वरूपत एवाभावः प्राप्त इत्यर्थः। **अज्ञाननिवृत्तित्वा-नुपपत्तिरिति** ।। अज्ञानानिवृत्तेः सदसद्वैलक्षण्याङ्गीकारे अज्ञानस्यापि सदद्विलक्षणत्वाङ्गीकारेणाज्ञानतन्निवृत्त्योः त्वन्मते (सालक्षण्या) सदसद्वैलक्षण्यानुपपत्तिरित्यर्थः । कुत इत्यत आह।। **प्रतियोगितन्निवृत्त्योरिति** ।। अत्र निवृत्तिशब्देन अत्यन्ताभाव एव विवक्षितः । न ध्वंसः। तथा हि। यदि निवृत्तिशब्देन ध्वंसो विवक्षितः स्यात्तर्हि प्रतियोगितद्ध्वंसयोः भिन्नसत्ताकत्वरूपं वैलक्षण्यमाव-श्यकमित्युक्तं स्यात्। तथा च तयोरेककालानवस्थानरूपो विरोध एव लोके न स्यात् । न हि प्रातिभासिकरूप्यस्य प्रध्वंसो व्यावहारिक इत्युक्ते कश्चनविरोधोऽस्ति । किं तु तयोः समानसत्ताकत्व एव । न हि रूप्यतद्ध्वंसावुभावपि व्यावहारिकवेवैकदा सम्भवतः । अत्यन्ताभाव विवक्षायां तु प्रतियोगितदत्यन्ताभावयोर्भिन्नसत्ताकत्वरूपवैल-क्षण्यमप्या वश्यकमेव । एवं सति तयोरविरोधः तन्मते सम्भवति । मायिना हि स्वात्यन्ताभावसामानाधिकरण्यं मिथ्यात्वमित्यङ्गीकृत्य मृत्पिण्डे घटतदत्यन्ताभाव-योरुभयोरपि सत्त्वमङ्गीकृत्य घटस्य मिथ्यात्वमुच्यते । तथा च प्रतियोगितदत्यन्ताभावयोर्विरोधः कुत्रापि तन्मते

नास्त्येव । यद्यस्ति तर्हिनिरुक्तं मिथ्यात्वं न सिध्यति । घटो व्यावहारिकस्तदत्यन्ताभावः पारमार्थिक इति तयोर्भिन्नसत्ताकत्वात् । यदि च प्रतियोगितदत्यन्ताभावयोः समानसत्ताकत्वं तर्ह्येव विरोधः । न हि व्यावहारिकयोर्घटतदत्यन्ताभावयोरेकदैव स्थितिःसम्भवति । तथा च प्रकृतेऽप्य ज्ञानस्य मिथ्यात्वसिद्ध्ये स्वात्यन्ताभावसामानाधिकरण्यम् । एकस्मिन्काल एव वाच्यम् । अन्यथा तन्न सिद्ध्येत् । तथा हि - यद्यज्ञानतदत्यन्ताभावयोः समानसत्ताकत्वं स्यात्तदा विरोधेन एककाले सत्ताऽयोगेनाज्ञानस्य निरुक्तमिथ्यात्वासिद्धिः । अतस्तत्सिद्ध्येऽज्ञान तन्निवृत्त्योरविरोधोऽवश्यं वाच्यः । स च भिन्नसत्ताकत्वरूपवैलक्षण्योक्तावेव सम्भवतीति । एवं प्रतियोगितदत्यन्ताभावयोर्भिन्नसत्ताकत्वरूपवैलक्षण्यस्याऽवश्यकत्वेन त्वन्मतेऽज्ञानस्य सदसद्विलक्षणत्वेन तन्निवृत्तेरपि सदसद्विलक्षणत्वमनुपपन्नमेवेति भावः ।

कुतो न वाच्यमित्यत आह ।। **पञ्चमप्रकारतेति** । सदसद्विलक्षणविलक्षणत्वाभ्युपगमादित्यर्थः । तत्क्षयः अविद्याक्षयः । न सन्नित्यादिना सम्बन्धः ।। **यक्षानुरूपो बलिरिति** ।। लोके भावपदार्थस्य निवृत्तिरभावः अभावस्य च निवृत्तिर्भावः । प्रतियोग्यापत्तेरेव अभावनिवर्तकत्वस्य प्रागभावे दृष्टत्वात् । भावाभावविलक्षणस्यज्ञानस्य निवृत्तिर्यादृशो यक्षः तादृशो बलिरिति न्यायेन पञ्चमप्रकार

इत्यर्थः । यक्षस्याल्पत्वे तद्बलेरपि अल्पत्वं, तस्य महत्त्वे तद्बलेरपि महत्त्वं दृष्टम् । तद्वत् महायक्षस्थानीयाज्ञाननिवृत्तेः पञ्चमप्रकारत्वरूपो महाबलिर्दीयत इति भावः । प्रत्यपीपदन् प्रतिपादितवन्तः ।। **प्रतीतिविरोधादिति** ।। अहमज्ञ इति प्रतीतिविरोधादित्यर्थः । यदसत्तन्न प्रतीयत इत्यङ्गीकारादिति भावः । इयं पराङ्गीकृता पञ्चमप्रकारता ।। सुतरामिति ।। प्रकारिण एवाभावादिति भावः ।। **तेन कल्प्यमानेति** ।। चतुर्थप्रकारासम्भवेन कल्प्यमानेत्यर्थः ।। **पूर्वोक्तरीत्यैवेति** ।। सङ्ख्यामधि करणप्रतियोगिभ्यामभावो निरूप्यत इत्युक्तत्वेनाज्ञाने सति तन्निवृत्तिरूपमोक्षस्य पञ्चमप्रकारता वक्तव्या । उक्तरीत्याऽज्ञानस्यैवासम्भवेन तन्निवृत्तिरूपमोक्षस्य सुतरामसम्भवेन पञ्चमप्रकारता कस्य स्यादिति भावः ।

अज्ञानकार्यं न वेत्यत्राज्ञाननिवृत्तिरिति वर्तते । **अवश्यंभावेति** ।। आवश्यकत्वेत्यर्थः । तन्मते पदार्थस्त्रिप्रकारः । आत्मा, अज्ञानं, तत्कार्यं चेति । तथा च अज्ञाननिवृत्तेरत्मातिरिक्तत्वे अज्ञानतत्कार्ययोरन्यतरत्वं वाच्यम् । तत्राज्ञानानिवृत्तेरज्ञानत्वायोगेन परिशेषादज्ञानकार्यत्वावश्यं भावादज्ञानकार्यं नेति पक्षो न युक्त इति भावः । तदा तर्हि । तदानीम् अज्ञाननिवृत्तिदशायाम् । कुत इत्यत आह ।। **न हीति** ।। तर्ह्यस्त्वज्ञान निवृत्तिदशायाम् अज्ञानमित्यतो-ऽज्ञानासम्भवेनेति मूलाभिप्रायमाह ।। **अज्ञाननिवृत्ता-विति** ।।

अज्ञाननिवृत्तिदशायामित्यर्थः । प्रतिया-गितदत्यन्ता भावयोरेककालताया विरुद्धत्वादिति भावः । **उभयथेति** ।। अज्ञातकार्यत्वतदभावविकल्पाभ्यामित्यर्थः ।। स्वरूपमेवेति ।। अज्ञाननिवृत्तिरूपमोक्षस्वरूपमेवेत्यर्थः ।। **दूरेति** ।। प्रकारिण एवाभावादिति भावः । अस्यां योजनायां चतुर्थप्रकाराभावादित्युर्वरितम् । तद्योजयति ।। **किं चेत्यादिना** । **देशकालादिव्यवस्थयेति** ।। आदिपदेन प्रकारग्रहणम् । तथा च घटस्य हि स्वोपाधौ सत्त्वं, परोपाधावसत्त्वम् । इदानीं सत्तवं कालान्तरे असत्त्वं, घटत्वेन प्रकारेण सत्त्वं, पटत्वादिप्रकारेणासत्त्वमितिव्यवस्थयेत्यर्थः ।। **अनुभवादिति** ।। तथा च दृष्टानुसारणी हि कल्पना दृष्टा। घटादिप्रपञ्चे प्रकारत्रयस्यैवानुभूयमानत्वेनाज्ञाननिवृत्तावपि व्यवस्थाया सत्त्वासत्त्वसदसत्त्वरूपप्रकारत्रयस्यैव वाच्यत्वादिति भावः ।। **चतुर्थप्रकार एवेति** ।। अननुभूयमानत्वादिति भावः ।। **अष्टमरस इवेति** ।। लोकेषड्रसानामेवानुभवेन सप्तमरसस्यानुभूयमानत्वाभावे अष्टमरसो यथाऽत्यन्तासम्भावितस्तद्वदित्यर्थः ।

।। **तदभावादेवेति** ।। विषयप्रयोजनयोराभावादेवेत्यर्थः । **तदविनाभूत इति** । विषयादिघटितलक्षणक इत्यर्थः ।। **सतामेव हीति** ।। न हि शशशृङ्गनृशृङ्गयोः सम्बन्धोऽस्तीति भावः।।

विषयाद्यभावादिति ।। सम्बन्धिनामेवाभावादिति भावः ।।

इति विष्णोः- पुरुषोत्तमत्वमेवेति वक्ष्यमाणमूलं व्याकुर्वन्नाह ।। **परमात्ममेनेत्यादिना** ।। क्षराक्षरयोः समस्तयोरपि प्रत्यक्षसिद्धत्वाभावाद् द्वाविमावित्यनुपपन्नमित्यत आह ।। **इमावितीति** ।। ननु ब्रह्मा शिवस्सुरेशाद्याः शरीरक्षरणात् क्षराः इति प्रमाणानुसारेण ब्रह्मादिपुरुषाणामिव सरस्वत्यादीनां स्त्रीणामपि शरीरक्षरणयोगेन क्षरशब्दवाच्यत्वावगमात्, पुरुषौ द्वावित्युक्ते सरस्वत्यादिस्त्रीणामक्षरशब्दवाच्यरमायाश्चासङ्ग्रहापत्त्या तत्सङ्ग्रहाय पुरुषशब्दार्थमाह ।। **पुरुषौ चेतनाविति** ।। चशब्दः अन्यसमुच्चायकः । एवशब्दश्चान्यव्यावर्तकः । तथाच विरुद्धयोस्तयोरेकत्र समावेशायोगाद्भिन्नक्रमेणैव सम्बन्धं दर्शयति ।। **एवशब्दस्येति** ।। **तद्धटनायेति** ।। परमपुरुषस्य तृतीयस्य वक्ष्यमाणत्वात् द्वावेवेत्येतदनुपपन्नमित्याशङ्क्य द्वावेवेत्यस्योपपत्तय इत्यर्थः ।। **लोक इति** ।। ईशितव्यवर्ग इत्यर्थः ।।

क्षरस्सर्वाणि भूतानीत्यादेरयमर्थः - सर्वाणि भूतानि ब्रह्मादयो जीवाः शरीरक्षरणयोगेन क्षरशब्देनोच्यन्ते । यथोक्तम् । ब्रह्माशिवस्सुरेशाद्याः शरीरक्षरणात् क्षराः इति । कूटस्थः । कूटंखं विदलं व्योम सन्धिराकाश उच्यते इत्यभिधानात् कूटमव्याकृताकाशः । तद्वन्निर्विकारतया

स्थितत्वात्, कूटे अव्याकृताकाशे अभिमानितया स्थितत्वाद्वा कूटस्थशब्दवाच्या महालक्ष्मीः अक्षरदेहत्वादक्षरा इति । पुंवच्छक्तित्वात्पुल्लिङ्ग शब्दवाच्यत्वं युक्तम्। यथाऽऽहुः- पुल्लिङ्गेनोच्यते श्रीश्च पुंवच्छक्तिमती यतः इति। **अपेक्षितमिति** ।। उत्तमत्वस्यावधिसापेक्षत्वादिति भावः । सम्मतिः समाख्या ।। **उदाहृत इति** । परमात्मा व्यवस्थितः इति श्रुतावुक्त इत्यर्थः । ननु निर्णीतस्थले समानोक्तिः समाख्या। तथा च यदीयम् अर्थसमाख्या तर्हि परमचेतन इति वक्तव्यम्। यदि च शब्दसमाख्या तर्हि परमपुरुष इति वक्तव्यम्। आत्मेति कथमुक्तमसङ्गतत्वादित्यत आह ।। **आत्म शब्दोऽत्रेति** ।। तथा चेयमर्थसमाख्येति भावः ।। **युक्तिं चाऽहेति** ।। क्षराक्षरान्यस्योत्तमपुरुषत्वे श्रुत्यादिसम्मतिमुक्त्वा युक्तिं चाऽहेत्यर्थः ।। **अविषृस्येति** ।। लोकत्रयं प्रविष्टस्येत्यर्थः । तन्नाशे लोकत्रयनाशे ।। **नाशप्रसङ्ग इति** ।। दह्यमान गेहान्तर्गतपुरुषवदिति भावः ।। तत् अव्ययत्वम् ।। **ऐश्वर्यादिति** ।। अघटितघटकशक्तिसम्पन्नत्वादित्यर्थः । अग्निस्तम्भविद्यावते दाहाभाववदिति भावः । एकार्थयोश्चापि शब्दयोरन्यतरवैय्यर्थ्यमाशङ्क्याऽऽह ।। **क्षरं चेति** ।। **तात्पर्येति** ।। स्वस्य पुरुषोत्तमत्व इत्यर्थः ।। फलमिति ।।

**"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये"**

इति वचनेन फलस्य तात्पर्यद्योतकत्वावगमादिति भावः ।। एवमित्यस्य व्यावृत्तिनिरास इति ।। पुरुषोत्तम इत्यस्य यस्मात् क्षरमतीतोऽहमित्यादिना यौगिकोऽर्थ उक्तः । स एवमित्यनेन परामृश्यते । एवं च एवमित्यस्य यौगिकार्थस्य व्यावृत्तिर्नाम रूढिः । तन्निरासोऽसंमूढ इत्यनेन क्रियते । तथा चैवमसंमूढपदाभ्यामित्युक्तं भवति । तद्व्यावर्त्यं दर्शयति । **न त्वश्वकर्णादिवदिति ।। संज्ञामात्रत्वेनेति** ।। रूढिमात्रत्वेनेत्यर्थः । यद्वा, एवमित्यस्य यौगिकार्थस्य व्यावृत्तिर्मिथ्यात्वं तन्निरासोऽसंमूढ इति पदेन क्रियते । तदभिप्रायमाह - न त्वश्वकर्णादिवदिति । यथाऽश्वकर्णादिवद्विद्यमानकर्णवत्त्वं पुरुषे अपारमार्थिकं, कुतः ? संज्ञामात्रत्वात्, एवमुक्तरीत्या यौगिकं पुरुषोत्तमत्वं हरावपारमार्थिकं संज्ञामात्रत्वादित्यादि सम्मोहवर्जित इत्यर्थः । अनेनैवाभिप्रायेणोक्तं विष्णुतत्त्वनिर्णयटीकायाम् ।। एतच्च पुरुषोत्तमत्वम् अपारमार्थिकमिति सम्मोहवर्जितः इति । सर्वभावेनेत्येतदन्यथा प्रतीतिनिरासाय व्याचष्टेति ।। **सर्वप्रकारेणेति** ।। बुद्ध्वा बुद्धिमानित्यनयोः पौनरुक्त्यपरिहाराय व्याचष्टे ।। **बुद्धिमानप-रोक्षज्ञानीति** ।। मतुपोऽतिश-यार्थत्वात् । अपरोक्षज्ञानस्य परोक्षज्ञानादतिशयितत्वा-दित्यर्थः । तथा

(च) बुद्ध्वेत्येतत्परोक्षतो बुद्ध्वेति व्याख्येयमिति भावः। इन्द्रियेभ्यः परा ह्यर्था इति श्रुताविन्द्रियादिशब्दाः अभिमान्यधि करणन्यायेन तत्तदभिमानिदेवतापरा इति ज्ञातव्यम्। बुद्धेरात्मा परः, आत्मनश्च महान् पर इति वैयधिकरण्येन योजनाशङ्कां परिहरति।। **आत्मा महानितीति** ।। बुद्धितत्वा-भिमानिसरस्वत्यनन्तरं महत्तत्वाभिमानिचतुर्मुखादर्वाक् अन्यस्योत्तमस्याभावादिति भावः। तथा च आत्मा विरिञ्चः सुमना इत्यभिधानात् महत्तत्वाभिमानी आत्मा विरिञ्चः बुद्धेः सरस्वत्याः सकाशात् पर इत्यर्थः। पुरुषो नारायणः। पुरुषो ह वै, नारायणः सहस्रशीर्षा पुरुषः इत्यादिश्रुतेरिति भावः। **अवधिरिति**। तारतम्यान्तर्गत इत्यर्थः । **कुत एतदिति** ।। तारतम्यान्तर्गत्वरूपमवधित्वं कुतः प्रमाणात् प्रतिपत्तव्यम्? प्रमाणाभावादनुपपन्नमिति यावदित्यर्थः। ननु परा गतिरित्यन्तेन किं प्रमाणमुक्तमित्याशङ्क्य गतिशब्दस्य भावकरणार्थ-प्रतीतिनिरासाय कर्मसाधनत्वम् अभिप्रेत्य गतिशब्दं व्याख्याति।। **गम्यत इति गतिरिति**।। अवगम्यत इत्यर्थः। गतिशब्दं प्रयुञ्जानायाः श्रुतेः सर्वशास्त्रण्येव तत्र प्रमाणतया अभिप्रेतानीत्याशयेनाऽऽह।। **एवमिति**। एतदवधित्वमेव तारतम्यान्तर्गतत्वेन सर्वशास्त्रैः प्रतिपाद्यत इति हेतोरुपपद्यत इत्यर्थः। एतदिति प्रश्नधर्म्यंशानुवादः। दृश्यते च धर्म्यंशानुवादेना-प्युत्तराभिधानं कःस्विदेकाकी चरति? इति प्रश्ने य एकाकी

चरति स सूर्य इत्याभिप्रेत्य 'सूर्य एकाकी चरति' इत्यादौ। तद्वदिहापीति ज्ञातव्यम्। भूम्न इति सूत्रम्। पूर्णज्ञानः पूर्णानन्द इति ज्ञानादिसर्वगुणविशेषणतया पूर्णत्वरूपभूमगुणस्य सर्वोपास्यत्वरूपं ज्यायस्त्वं विवक्षितमिति भाश्योक्तव्याख्यानस्य अत्रानुपयुक्तत्वात् प्रकृतोपयुक्ततयाऽभिप्रेतं सूत्रार्थमाह।। **सर्वगुणेष्विति**।। **भूमगुणस्येति**।। सर्वोत्तमत्वरूपपूर्णत्वाख्यभूमगुणस्येत्यर्थः। श्रुत्या चाभिहितमित्यनन्तरं तदेव वेदादिप्रतिपाद्यं न ब्रह्मात्मैक्यमित्युक्तरीत्या शोषो द्रष्टव्यः। अत्र इति विष्णोः इति वाक्यं टीकाकारणामेव, न भगवत्पादवाक्यम्। क्वचिन्मूलकोशे पाठादर्शनादिति केचित् साम्प्रदायिका आहुः। बहुमूलकोशेषु पाठदर्शनात् भगवत्पादीयं वाक्यमेवेति बहवः साम्प्रदायिा इति ज्ञातव्यम्।

**अन्यथा हीति** । भ्रन्तिनिरसाकरण इत्यर्थः ।। **तदनुगुणमिति**। प्रकरणप्रतिपाद्यसर्वोत्तमत्वानुगुणमित्यर्थः। भगवद्वाक्यं भारतरूपं व्यासवाक्यम्। समापितग्रन्थो भगवांष्टीकाकारोऽतेऽपि मङ्गलमाचरति।। वचनेति।। यथा केनचित् भिक्षुणा रचिता पुष्पमाला ऐश्वर्यवन्तं पुरुषं प्रतिदत्ता चेत्तेन दयया हृदये ध्रियते तद्वदित्यर्थः। सदये दयया सहिते। **कमलेति**। महिला वनिता प्रिया इत्यभिधानात्, कमला महालक्ष्मीः महिला वनिता यस्यासौ तथोक्तः, तेनेत्यर्थः।

यादवार्यहृदंभोजभातश्रीमध्वहृद्व्रतः ।
वासवीसूनुरमलः प्रीयतां बादरायणः ।

इति श्रीयदुपत्याचार्यपूज्यपादराधकेन श्रीनिवासेन विरचिता मायावादखण्डनपञ्चिकाव्याख्या समाप्ता ।।

।।श्रीः।।

**।। मायावादखंडनटीकाप्रारंभः।।**

**श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक**

**लक्ष्मीहयग्रीवायनमः।**

**नरसिंहमसह्योरुप्रत्यूहतिमिरापहम्।**
**प्रणिपत्य व्याकरिष्ये मायावादस्य खंडनम्।।१।।**

**।।श्रीः।।**

।।अथ मायावादखंडनटिप्पणी मायावादपरशुः प्रारभ्यते ।।

श्रीवेदव्यासायनमः।।

**नमामि जानकीजानीं दुष्टरक्षोनिबर्हणमू ।**
**समस्तगुणसंपूर्णं भक्ताानुग्रहकारणम्।१।।**

**नौमि सत्यनिधिं तस्माद्धिजयः सर्वदा मम।**
**भवत्येवाखिलज्ञानसिध्यर्थं ज्ञानदं गुरुम्।।२।।**

**इह हि विविधसांसारिकदु:खदर्शनेन विरत्कस्य शमदमादिमतो मुमुक्षोरधिकारिणस्तन्निवृत्यै परमानंदावाप्त्यै च सकलजीवजडात्मकात्प्रपंचात्परमार्थत**

**मायावादनिरासाय प्रवृत्तो भार्गवं हरिम् ।**
**प्रणमामि सदाभक्त्याया प्रीत्या परशुलब्धये ।।३।।**

**टीकाकारः** स्वयं मंगकलमनुष्ठाय निबध्नाति । **नरसिंहमिति**। अस्य प्रकरणस्य वेदादेः स्वाभिमतविषयादि

समर्थनं पराभिमतविषयादिनिरासकत्वं च प्रयोजनमिति वक्तुं किंतत्स्वाभिमतं विषयादिकं किंतत्परामिमतविषयादिक मित्याकाङ्क्षानिवृत्तय आचार्याभिमतं विषयादिकं तावदाह- **इहेति**। सकलश्रुतिस्मृत्याद्युक्तज्ञानवतोऽपि वैराग्यादिशून्यस्य मोक्षो न इश्येते इति न वेदानां दुःखनिवृत्तिः परमानंदा वाप्तिश्चप्रयोज नमित्याशंकानिवृत्यर्थं विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमदमादिमत इति विशेषणद्वयमू । मुमुक्षोरिति मध्यमाधिकारिस्वरूप कथनमू।। यद्गुणविशिष्टतया भगवत्प्रतिपादनं मोक्षसाधनं तद्गुणविशिष्टतया

**एवात्यन्तभिन्नं निखिलगुणोदारं निरस्तसमस्तदोषं परब्रह्म प्रतिपादयितुं सकलश्रुतिस्मृतीनां तदुपकरणभूतब्रह्ममिमांसायाश्च प्रवृत्तिरिति तत्वम्। अपरे तु स्वतः परब्रह्मभूतस्यैव जीवस्याज्ञाननिमित्तं दुःखादि तदव्दैतज्ञाननि (बर्हणीय) वर्तनीयमित्यतोऽनर्थहेतोरस्य प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वशास्त्रारंभ इति वर्णयन्ति। तन्मतमपाकृत्य स्वमतं समर्थयितुमिदं प्रकरणमारभमाणो भगवानाचार्यः परममंगलं नरसिंहस्तवनमादावाचरति ।।**

**नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः।**
**जयत्यमितसजज्ञानसुखशक्तिपयोनिधिः।।**
**अखिलं चैतन्यमात्रातिरिक्तं । अज्ञानकल्पितमिति**

प्रतिपादयितुं वेदादि प्रवृत्तमित्याह- निखिलगिणोदारमिति ।। पराभिप्रेतं विषयादिकमनुवदति **अपरे त्विति** ।। **आदावाचरतीति**। अनेन मंगलं निबद्धमिति सूचितमू । अन्यथा अनुष्टीयमानमंगलस्य प्रकरणादित्वमनुपपन्नं स्यात् । **चैतन्यमात्रेति**। अत्र मात्रशब्दः **यन्मतं तदेव ध्वान्तमिव । सम्यगज्ञानप्रतिरुपत्वातू । तन्निरसने दिवाकर इव। जयत्युत्वृकृष्टो वर्तते। तथा चोत्कमू। ''जयेर्जयाभिभवयोराद्येऽथैऽसावकर्मकः। उत्कर्षप्राप्ति राद्योऽर्थो द्वितीयेऽथै सकर्मक''इति**। केवलार्थः। तेन केवलचैतन्यातिरिक्ताविशिष्टाकारस्यापि मिथ्यात्वं लब्धं भवति। **जयेरिति** । धातुनिर्देशार्थक इकारप्रत्ययोयम्। नतु 'इकूश्तिपौ धातुनिर्देश' इत्यनेनोक्त अकू । तेन जि इत्यस्मादिक्प्रत्यये कित्वाद्गुणप्रतिषेधे इयडादेशे जियेरिति भवेत् जयेरिति कथमिति परास्तम्। 'धातुनिर्देश इक्रश्तिपा' विति नियमस्य 'विपराभ्यांजे' रिति केवलधातुनिर्देशं कुर्वता सुत्रकृता त्याजितत्वात्। प्रामाणिकप्रयोगानुसारेणेकारस्यापि धातुनिर्देशे ग्राह्यत्वत् । ततश्चयमर्थः। जयेः जिधातोः जयेऽभिभवे च वृत्तिः । आद्योऽर्थेऽसावकर्मकः। कुत आद्योऽथैऽकर्मकइत्यत **आहउत्कर्षप्राप्तिरिति** । यस्मादुत्कर्षप्राप्तिराद्योऽर्थः स चोत्कर्षः कर्मणा विनैव प्रतीयते । अतोऽसावकर्मकः । अभिभवलक्षणेऽथैऽयंधातुः सकर्मकः 'राजाशत्रूञ्जयती'ति सकर्मकतया प्रतीतेरिति ।। **सत्वं ज्ञानसुवशक्तीनां**

**विशेषणम्। ज्ञानस्ययथार्थत्वं सत्वं सुखस्य दु:खासंभिन्नत्वम् शत्केरप्रतिबद्धता । ताभि: पयोनिधिरिव । पयोनिधि: परिमितो भवतीत्यतस्त ममितत्वेन विशिनष्टि । द्विविध: खलु पुरुषार्थोऽनिष्टनि वृत्तिरिष्टप्राप्तिश्च । तत्राखिलेति मायावादादिदुर्भत प्रसंजितमिध्याज्ञानाद्यनिष्टनिवर्तकत्वेन नरसिंहस्तुतिर्वि हिता । अभितो तिसम्यग्ज्ञानादिसमस्तो ष्ट संपादनसामर्थत्वेनेति ।। आखिलाज्ञानमतं ध्वान्तसममित्येत दसहमान आह । जीवब्रह्मणोरेकत्वं हि श्रुतितनमी मांसाभिस्तात्प-**

सत्वमिति । अत्र सत्वशब्दो निर्दुष्टत्ववाची । एवं चायं येन येन विशेष्यते तत्तस्य दोषाभावं वत्कि । ज्ञानस्यायथार्थत्वं दोष: तस्य निर्दुष्टत्वेऽभिहिये यथार्थत्वं लभ्यते । सुखस्य दु:खसंभेदो दोष: तस्य निर्दोषत्वेऽभिहिते दु:खासंभिन्नत्वं लभ्यते। शत्के:प्रतिबंधो दोष: तस्य निर्दोषत्वेऽभिहितेऽप्रतिबद्धत्वं लभ्यत इति भाव:।। असहमा नइति ।। असह्यत्वप्रयुत्कव्यग्रचित्त आहेत्यर्थ:।। एतेन जीवब्रह्मणोरे कत्वमखिलस्यज्ञानकल्पिततया विना नोपपद्यत इत्ययुत्कमू । विरु-

**र्यत: प्रतिपाद्यते । न चैतच्चैतन्यातिरित्कस्याखिल स्याज्ञानकल्पिततया विप्रपद्यते। तत्कथमेवमुच्यत इति।**

द्धधर्माधिकरणत्वपरिहाराय सर्वासत्वस्य वत्कव्यत्वे नाज्ञानकल्पितत्वाभिधानस्यासंगतत्वातू । अज्ञानकल्पितत्वपि

सर्वज्ञतवासर्वज्ञत्वरुपधमार्णां स्वरुपानुपमर्देन विरुद्ध धर्माधिकरणत्वापरिहारात् । किंच ज्ञानकल्पितत्वं नामाज्ञानजन्यत्वमेवनान्यत् । अनिरुपणात् । सर्वज्ञत्वाल्प ज्ञत्वादिधर्माणामज्ञानजन्यत्वे को लाभः । स्वस्वप्रयोजंकप्रयोज्यत्वे का हानिः। येनाज्ञानकल्पितत्ववचनं युत्कं स्यात्। अपि च सर्वज्ञत्वाल्पज्ञतावादीनि प्रमाणसिद्धानि । परस्परं विरुद्धानि च भवन्त्येव । न चैतानि कल्पितानीत्युक्ति मात्रेण स्वभावभूत विरोधंत्यजनि। मातङ्गस्य मशकइत्युत्किमात्रेण स्वभावहानिप्रसंगात्। तत्श्च राजानो हस्त्यश्वरथं बिभृभुः किंतु मशकिन इत्युक्तिमात्रेण कृतिनो भवेयुः। किंच यदि सर्वज्ञत्वाल्पज्ञत्वादीन्यज्ञानकल्पितानि तर्हीदानीमेव ज्ञानेनाज्ञाननिवृत्यनन्तरमिवैक्यं कुतो न भवेत् । कल्पितानां धर्माणामविरोधस्य मायावादिनैवोत्कत्वात्। अपि च विरुद्धधर्माणां भेदकारकत्वेनैक्यविरोधः । उत भेदज्ञापक त्वेन ।। नाद्यः। भेदस्य जीवेश्वरस्वरुपत्वेन विरुद्धधर्मजन्यत्वाभावात्।

**मैवं । स्यादेतदेवं यदि जीवब्रह्मणोरैक्य प्रतिपादकत्वं वेदतन्मीमांसयोरुपपन्नं स्यात्। न चैतदस्ति। तत्परतया व्यारव्योने वेदादेरनारंभणीयत्व प्रसंगात्। तत्कथमिति तत्राह।। विमतमनारंभणीयम् । अन्यथाप्रतिपादकत्वात्। यदित्थं तत्तथा यथा संप्रतिपन्नम् टीका।। विमतमारं भणयित्वानारं भणीयत्वाभयां विमतिविषयीभूतं श्रुतितन्मीमांसा-**

न द्वितीयः । भेदे श्रुतिसद्बवेन ज्ञापकविशेषाभावमात्रेण ज्ञाप्याभावाभिधानायोगात्। तथा च कथमेवंविधं दुष्टवचनं मायावादिनः संभावितमिति निरस्तम्। भ्रान्तचित्तस्य दुष्टार्थप्रतिपादनेऽसंभावनाभावात्।। **तत्परतया व्यारव्यानइति।।** अत्र व्यारव्यानग्रहणं परेण वेदादीनां तत्परत्वमङ्गीकृतमिति नापादकासिद्धिरिति ज्ञापनार्थम् ।एतेन तत्परत्वेऽनारंभणीयतवं स्यादित्येतावतैव पूर्णत्वाव्द्यारव्यानग्रहणं व्यर्थमिति निरस्तमू । ऐक्यपरत्वे पराङ्गीकारेण सत्येवानारंभणीयत्वस्यापादितत्वात्।। **कथमितीति** ।। ऐक्यप्रतिपादकत्वेऽप्यारंभ णीयत्वसंभ- वादैक्यप्रतिपादकत्वं कथमनारंभणीयत्वप्रयोजकमित्यत आहेत्यर्थः।। **आरंभणीयत्वानारंभणीयत्वाभ्यामिति** ।। ननु वादिप्रतिवादिभ्यां श्रुतितन्मीमांसाशाखस्यारंभणीयत्वाङ्गीकाकारा-रंभणी शास्त्रमू ।

**शास्त्रमनारंभणीयमित्येव्क्कत्वे बौद्धादिशा खाणामनारं भणीयत्वस्य परेणाभ्युपगतत्वदिष्टापादनमे-तत्स्यातू ।तर्हि वेदादीत्येवोच्यतामू ।मैवं। विमतिग्रहणेन**

यत्वानारंभणीयतवाभ्यां विमतमित्युक्तमयुत्कम् । प्रत्युतैक्यपरक्वभेदपरकवाभ्यां विप्रतिपत्तेः सभ्दावादैक्यपरत्व भेदपरत्वभ्यां विमतमित्येव वत्कव्यमिति चेत् । न ब्रूमो वयमारंभणीयत्वानारंभणीयत्वाभ्यां वादिप्रतिवादिविप्रतिपन्नमिति। येनात्रदोषःस्यात्। किं नाम बौद्धबादरायणविप्रतिपन्नमिति ।अत

एव मिथ्यात्वानुमानखंडनटीकायामिव वादिप्रतिवादीति नोत्कम्। बौद्धबादरायणविप्रतिपत्यभिधानस्य क्वोपयोग इति चेन्न । बादरायणशिष्येण मायावादिना तद्विप्रतिपन्नं वेदाद्यनारंभणीयत्वं नाङ्गीकर्तुमुचितमित्यापाद्यानिष्टत्वज्ञापनार्थत्वात् ।। ननु शाख्रशद्बेन वेदादिशाख्रग्रहणं कार्यमित्यत **आहशस्त्रमिति** ।। ननु शास्त्रशद्बेन वेदादिशस्त्रग्रहणे इष्टापादनमेतत्स्यादित्यनुपपन्नं प्रसज्यत इति चेत्। न ब्रूमो वयमिष्टापादनं भवतीति। किं नाम शास्त्रशद्बस्य विवक्षितार्थमजानतो मंदस्येष्टापादनमिति भ्रमः स्यादिति।।**तर्हीति**।। वेदादीति विस्पष्टमेवोच्यतां किं विम-

**निराश्रयत्वादिदोषपरिहारस्यापि सूचितत्वात्। एवमापाद्यवैकल्यादिदोषपरिहारसूचनाय यथासंप्रतिपन्न मित्युत्कमू । अन्यथा यथाबौद्धादिशास्त्रमिति ब्रूयात् । नन्वनारंभणीयत्वं नामाऽप्रणेतव्यतवं वा अक्षोतव्यत्वादिवं? वा। आद्ये त्विष्टापादनमू । वेदस्याप्रणेतव्यतवात् । न द्वितीयः। बौद्धादिशास्त्र श्रवणस्यापि दर्शनात्। मैवमू ।**

तग्रहंणमिति भावः। एतेन शास्त्रशद्बेन वेदादिकं गृहीत्वा शंकासमाधानयोः कृतत्वात्पुनः शङ्काऽनुपपन्नेति परास्तम्। पूर्व शास्त्रशद्बेन श्रुत्यादिग्रहणमाशङ्क्य दूष्यते इति भेदः।। **विमतग्रहणेनेति**।। न केवलं मायावाद्यनिष्टत्वं सूचितम् । अपि तु निराश्रयत्वादिदोषपरिहारसूचनं च प्रयोजनमस्यास्तीति वेदादीतिपक्षनिर्देशमकृत्वा विमतमिति पक्षनिर्देशः कृत इति भावः। यदि वेदादिकमप्रसिद्धं स्यात्तर्हीश्रयाभावाद्विमतिर्नस्यात् । अस्ति

च विमतस्तस्माद्वेदादिकं नासिद्धमिति । तथा यद्यनारंभणीयत्वमसिद्धं स्यात्तर्हि विमतिः निस्यात् । अस्ति च विमतिस्तस्मान्ना प्रसिद्धमिति सूचनप्रकारो द्रष्टव्यः । यद्यपि

**प्रेक्षावादुपादेयत्वाभावस्यविवक्षितत्वात् । स्यादितिप्रतिज्ञावाक्यशेषः । तथा च यदिवेदादिकं जीवब्रह्मणोरैक्यप्रतिपादकं स्यात्तदानारंभणीयं प्रसज्येतेत्युक्तं भवति। आपादकमेवान्य थाप्रतिपाद कत्वादीत्यनेन।**

प्रतिवदिनो नाश्रयासिध्यादिशङ्का तथापि तटस्थस्य शंका भवत्येवेति विमतमिति वचनं सार्थकम् । एवं तटस्थस्यापाद्यवैकल्यादिशङ्कापरिहाराय संप्रतिपन्नमित्युत्क मितिभावः । एतेन बौद्धादिशास्त्रे आपाद्यमेव नास्तीति यःशङ्कते स संप्रतिपन्नमित्युत्किमात्रेण न समाहितो भवेत् । अतिप्रसंगादिति परास्तम् । बौद्धादिशास्त्रे आपाद्यमस्तीति न मयाङ्गीकियत इति तटस्थेनाशाङ्किते त्वदीयापाद्यासम्मातिर्न दूषणम् । वादिप्रतिवाद्यसम्मतेरेव प्रयोजकत्वात्तस्या श्चेहाभावादिति सूचने समाधानस्य संभवात् ।। ननु विमतमनारमभणीयामिति साधनमदुक्तम् । बाधादपसिद्धांताच्चेत्यत आह **दिस्यातिति प्रतिज्ञावाक्यशेषइति** ।। आपादनमेवेदं नतु साधनमिति भावः ।। नन्विदमापादनमयुत्कम् । आपादकाभावादित्यत आह । **तथाचेति** ।। एवं तर्हि हेत्वभिधानंव्यर्थमित्यत आह । **आपादकमेवेति** ।। अप्रयो-

**हेतुवाक्येन विव्रियत इत्यदोषः । तच्चोत्तरत्र प्रदर्शयिष्यामः। अथवा वेदतन्मीमांसादिकमक्यपरतया व्याकुर्वन्मायावादिप्रणीतं शास्त्रमेव पक्षीकृत्य तस्यानारंभणीयत्वं वेदादेस्तत्परत्वनिरासनं साध्यते । कथमन्यथाप्रतिपादकत्वं विमतस्य शास्त्रस्येत्यत आह।**

जकत्वशंकानिरासेनापादकानिष्टं प्रयोजकत्वं हेतुवाक्येन स्फुटीक्रियत इति भावः।। **कथमिति**।। विमतस्य शास्त्रस्य मायावादवास्त्रस्य।। अन्यथाप्रतिपादकत्वं कथम्। न कथमपि । असिद्धो हेतुरिति भावः।। (मूले) नहीति।। तत्पक्षे ब्रह्मात्मैक्यस्य याथार्थं नहि। अप्रामाणिकस्य प्रमाणविरुद्धस्य सूत्रकारानभिमत्तवातू। ततश्चासत ऐक्यस्य सत्वेन प्रमाणभूतवेदादिविषयत्वं प्रतिपादयतो मायावादिशास्त्रस्यान्यथा प्रतिपादकत्वमिति मूलार्थः । एतेन वेदादीनामैक्यपरत्वं मायावादिशास्त्रप्रतिपाद्यमू। अतस्तस्यान्यथाप्रतिपादकत्वैव्युप्तादनाय वेदादीना माक्यविषयत्वमयथार्थमिति वत्कव्यमू। न त्वैक्यस्यायथार्थत्वंवाच्यमू। ऐक्यस्यायथार्थत्वेपि वेदादीनां तत्परत्वस्य यथार्थत्वमात्रेण मायावादिशास्त्रस्य यथार्थप्रतिपादक-

**नही ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे ।। अन्यथाप्रतिपादकत्वं ह्ययथार्थप्रतिपादकत्वम्। ब्रह्मात्मनोरेकत्वं च शास्त्रविषयतया परस्याभिमतं तत्यारपरमार्थभूतम्।**

त्वसंभवात् । अन्यथोन्मत्तवाक्यं शशश्रृंगादिसत्तापरमिति अज्ञवचनस्याप्यन्यथाप्रतिपादकत्वप्रसङ्ग इति परास्तम् ।। ऐक्यगतशास्त्रविषयत्वस्यासत्वे तात्पर्यात् । एतेनैवैक्यंब्रह्मास्वरुपं सत्यमिति वदतो मायावादिनो मते ऐक्यस्य यथार्थत्वात् तत्पक्षे याथार्थ्यं नास्तीति कथनमयुत्क । तथा स्वपक्षेपयैक्यस्य याथार्थ्यं नास्तीति त्पक्षे इति व्यर्थम् । स्वरीत्या सत्वाभवासंभवे पररीत्या संभव एव तत्पक्ष इति वत्कव्यत्वात् । तथा विमतस्य जगतः परोत्कमिथ्यात्वसजातीयस्यैक्यमिथ्यात्वस्यान्यथा प्रतिपादकत्व- समर्थनानुपयुक्तत्वेनैक्यस्यतत्कथन मयुत्कमित्युत्कं परास्तम् । तत्पक्ष इत्यस्य सूत्रकारपक्ष इत्यर्थकत्वात् ।। **शास्त्रस्य विषयतयेति** ।। वेदादिशास्त्रस्य विषयतया परस्याभिमंत तद्विषयत्वं न परमार्थभूतं । वेदादिना ऐक्याप्रतिपादनात् । अतो मायावादादिशास्त्रस्यान्यथाप्रतिपादकत्वं सिद्धमित्यर्थः । नन्वस्त्वनुमानपरतया विमतमिति मूलव्यारव्यानं तर्कपरतया कृतं पूर्वव्यारव्यानमनुपपन्नं । अन्यथाप्रति पादकत्वादित्यस्य

**अतोऽन्यथाप्रतिपादकत्वं सिद्धम् । ननु यद्यद्वैतपरं शास्त्रं स्यात्तदानारंभणीयं प्रसज्येतेति प्रसंगोत्कावापा दकस्योत्कत्वा -त्पुनर्हेत्वभिधानं व्यर्थं स्यात् । नचैताजेखारा जताभिधानमिति वाच्यम् । तथासत्यन्यथाप्रतिपादक त्वादित्यस्य ब्रह्मात्मैक्य**

**प्रतिपादक त्वादित्यर्थः स्यात्। तथा च दृष्टांतानुपपत्तिः। नहि ब्रह्मात्मै-**

वैय्यर्थ्यप्रसंगादिति भावेन शंकते । **नन्विति** । पुनःशब्दो वाक्यालंकारे । प्रसंगस्य मूलाभिप्रेतत्वे आपादकस्यान्यथा प्रतिपादकत्वादित्यस्माभ्दिन्नस्योत्कप्रायत्वात्धेत्व भिधानं व्यर्थं स्यादिति भावः। एतेन पूर्वमेकस्य हेतोरनुत्कत्वात्पुनरित्यनुपपन्नं तथापादकस्योत्कत्वादित्यप्यनुपपन्नं मूलकृता तदनभिधानादिति परास्तं । आपादकमावान्यथाप्रतिपाद कत्वादित्यनेन हेतुवाक्येन विव्रियत इति पूर्वमुत्कत्वाद्वैय्यर्थ्य शंकानुपपन्नेत्याशंक्य निषेधयति ।। **नचैतदिति**।। एतदेव। अन्यथाप्रतिपादक त्वादित्येतदेव । आपादकविवरणमिति न वाच्यमित्यर्थः।। **तथासतीति**।। विवरणविव्रियमाणरुपत्वेन सार्थक्यस्योत्कत्वेन वैय्यर्थ्यशंकेयमनुपपन्नेति परास्तं । भवदुत्कविवरणरुपत्व मयुत्कमिति मन्यमानस्य शंकासंभवातू ।। **तथाचेति**।। बौद्धशास्त्रे

**क्यस्येत्युपपादनानुपयोगोऽसंगतत्वंचेति । मैवं। अभिप्रायसभ्दावात्। तथाहि। यद्यद्वैतमेव शास्त्रर्थः स्यात्तदा शास्त्रमनारंभणीयं स्यादित्युत्के निमित्तनैमित्तिका भावस्यास्फुटत्वातू कथमित्याकांक्षायामन्यथा प्रतिपादकत्वादित्युत्वं । यादि शास्त्रार्थोऽद्वैतं स्यात्तदाशास्त्रमन्यथाप्रतिपादकं स्यात्। ततश्चानारंभणीयं प्रसज्येतेति।**

